इतीदमुक्तं निखिलं यथातथं *
तदन्ववेक्ष्यं सततं भिषग्विदा।
तथा हि सिद्धिश्च यशश्च शाश्वतं
स सिद्धकर्म्मा लभते धनानि च॥ ४३॥

इत्यग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते इन्द्रियस्थाने गोमय-चूर्णीयमिन्द्रियं नाम द्वादशोऽध्यायः॥ १२॥

श्लोकसङ्ख्या॥ ४०५॥

गङ्गाधरः—अथैतदिन्द्रियस्थानस्य ज्ञान वैद्यानां फलमाह—इतीदमित्यादि। सिद्धिं क्रियासिद्धिम्॥ ४३॥

अध्यायं समापयति—अग्नीत्यादि। इतीन्द्रियस्थानं सम्पूर्णम्।

इति वैद्यश्रीगङ्गाधरकविरत्नविरचिते चरकजल्पकल्पतराविन्द्रियस्थानजल्पे पञ्चमस्कन्धे गोमयचूर्णीयद्वादशाध्यायजल्पाख्या द्वादशी शाखा॥ १२॥

सिद्धाश्रयञ्च यथा—'इष्टालम्भः सुखेन च' इति ग्रन्थोक्तम्। इतीत्यादिनेन्द्रियस्थानोक्तं प्रमेय-जातं महाफलत्वेनावश्यबोध्यतयोपदर्शयन्नुपसंहरति॥ ४२। ४३॥

इति महामहोपाध्यायचरकचतुराननश्रीमच्चक्रपाणिदत्तविरचितायामायुर्व्वेददीपिकायां चरकतात्पर्य्यटीकायाम् इन्द्रियस्थाने गोमयचूर्णीयेन्द्रियं नाम द्वादशोऽध्यायः॥ १२॥

---

समाप्तमिदमिन्द्रियस्थानम्।

॥ श्रीः ॥

---

* यथा तथा इत्यपि पाठः।